मेवावभृथस्तद्धैतद्घोर आङ्गिरसः कृष्णाय देवकीपुत्रायोक्त्वोवाचापिपास एव स बभूव सोऽन्तवेलाया-मेतत्त्रयं प्रतिपद्येताक्षितमस्यच्युतमसि प्राणसंशितमसीति तत्र द्वे ऋचौ भवतः । आदित्प्रत्नस्य रेतस उद्वयं तमसस्परि ज्योतिष्पश्यन्त उत्तरम् " इति । भाष्यम्—शारीरयज्ञसंपादी पुरुष आत्मानं यज्ञमनुमन्यते सोऽत्र तच्छब्देनोच्यते । स यदशिशिषति क्षुत्क्षामः सन्नशितुं भोक्तुमिच्छति तथा पिपा-सति तृषार्दितः सन् पातुमिच्छत्यत एव न रमते क्षुत्पिपासाजनितदुःखमनुभवति ता अस्य यज्ञपुरुष-स्य दीक्षा । यतो दीक्षायामनशनादिना क्लेशानुभव एव । यज्ञस्तु दीक्षोपसदस्तुतशस्त्रदक्षिणादिभिः संपद्यते । तत्र दीक्षा व्रतविशेषः । अथोपसद आह—अथेति । स यज्ञपुरुषो यदश्नाति जेमति तथा यज्जलं पिबति तथा रमतेऽन्नपानादिना सुखमनुभवति तैरुपसदैरेति वर्तते यत्र उपसदस्तु यज्ञजनितसुखानुभवरूपाः । अथ स्तुतश-स्त्राण्याह—यद्धसतीति । यज्ञपुरुषो यद्धसति विनोदकथाभिरीषद्धास्यमुखोपक्रमं कुरुते तथा जक्षति हसति तथा मैथुनमृतुकाले भार्यामनुगच्छति तानि स्तुतशस्त्राणि "द्वादश स्तोत्राणि द्वादश शस्त्राणि" इतिश्रुतेः । स्तुतं नाम-स्तोत्रमुद्गातुः स्तावकवाक्यसंदर्भस्तथा होतृपठ्यमान ऋक्संदर्भ उक्थापरपर्याय. शस्त्रशब्देनोच्यते । शाङ्खा-यनब्राह्मणेऽपि "अथानुस्तुतशस्त्रयोरेवैकाहिकं प्रातःसवनम्" इत्यादि । तैः स्तुतशस्त्रैरेति वर्तते । अथ दक्षिणा-माह—यत्तप इत्यादिना । प्रसिद्धास्य दक्षिणा धर्मपुष्टिकरत्वात् । अथैतस्य यज्ञपुरुषस्य चरमदेहोत्पत्तिं सुत्यन्तरो-क्तामाह—तस्मादिति । यस्मादेवं यज्ञपुरुषस्वरूपं तस्मादन्यशाखोक्ताः श्रुतय आहुः "सोष्यत्यसोष्ट" इति । तस्य पुरुषस्य तद्देहातिक्रमे तन्माता सोष्यति प्रसविष्यति तथासोष्ट प्रासूतेत्युपक्रममात्रं दर्शितम् । तत्र प्रागेवो-क्तम्—"तस्य वैतस्य हृदयस्य पञ्च देवताः सुपयस्तथा पञ्च ब्रह्मपुरुषान्यो वेद तस्य कुले वीरो जायते प्रतिपद्यते स्वर्गं लोकम्" इति । अत्र वीरशब्देन पाण्डुपुजयशील प्रोच्यते । तथा बृहदारण्यकेऽपि—"तस्मात्पुत्रमनुशिष्टं लोक्यमाहुस्त्वं ब्रह्म त्वं यज्ञस्त्वं लोकः" इति । पित्रा पृष्टः सन् स पुत्रः प्रत्याह ब्रह्माहं यज्ञोऽहं लोक इति । इयमेव चरमदेहोत्पत्तिरस्य यज्ञपुरुषस्य परीक्षा । अनेन प्रकारेण पुनरुत्पादनं जन्मास्य । तद्देहपरित्याग एवावभृथो यज्ञान्तस्नानम् । अथोपसंहरन्नाह—तद्धैतद्घोर इति । एतन्निरूपितप्रमेयं घोरनामपूर्वक आङ्गिरस आचा-र्यो भगवते कृष्णाय देवकीपुत्रायोक्त्वा पुनरुवाच । तत्किम्, स यज्ञपुरुषोऽपिपास एव बभूव पिपासा रसादि-सकलविषयेच्छा तद्रहितो बभूव भवति । अनन्तरं सोऽन्तवेलायां प्राणलयसमये भगवदुपदिष्टं यजुर्मन्त्रत्रयं प्रति-पद्यते प्राप्नोति । तत्किम्, अक्षितमसीति प्रथमः । अच्युतमसीति द्वितीयः । प्राणसंशितमसीति तृतीयः । भाष्यम्—निर्याणकाले यज्ञपुरुषः स्वात्मानं वदति । भो जाव त्वमक्षितमपरिच्छिन्नमखण्डैकरसमसि, तथाच्युतमप्रच्यु-तस्वभावमसि, तथा प्राणः श्वासवायुस्तेन संशितं तनूकृतमसि सूक्ष्मप्राणापानादिरसि । एवंविधस्तत्त्वमसीति महावाक्यसंदर्भः । अत्रास्मिन्नर्थे द्वे ऋचौ भवतः यथा—"आदित्प्रत्नस्य रेतसो ज्योतिष्पश्यन्ति वासरम् । परो यदिध्यते दिवा ॥ १ ॥ उद्वयं तमसस्परि ज्योतिष्पश्यन्त उत्तरम् । देवं देवत्रा सूर्यमगन्म ज्योति-रुत्तमम् ॥ २ ॥" भाष्यम्—आदिति समन्तात् । इदेवकारार्थे प्रत्नस्य पुराणस्य चिरन्तनस्य रेतसो बीजभू-तस्य जगत्कारणस्य ब्रह्मणो ज्योतिः प्रकाशं वासरमहरहः पश्यन्ति पर इति लिङ्गविपर्यासः । ब्रह्मणो ज्योतिर्निवृत्तचक्षुषो ब्रह्मविदो ब्रह्मचर्यादिनिवृत्तिसाधननिरुद्धान्तःकरणा आ समन्ततो ज्योतिः पश्यन्ती-त्यर्थः । तत्किम्, ज्योतिर्दिवि मूर्ध्नि स्वर्गे वा यदिध्यते दीप्यते । येन ज्योतिषाढ्यः सविता तपति चन्द्रमा भाति विद्युद्विद्योतते तारागणा भान्ति तदित्यर्थः । उद्वयमिति उदूर्ध्वं ज्योतिः स्वप्रकाशं तेजो वयं पश्य-न्तः सन्तोऽप्यगन्म प्राप्तवन्तः । किंभूतं तेजः, तमसः परि तमसोऽज्ञानात् परि परित उत्कृष्टम् । देवं द्योतमानं देवत्र देवेषु मध्य आमूर्यं सूर्यं मर्यादीकृत्य द्योतमानम् । उत्तमं निरतिशयम् । तदुक्तं नारायणो-पनिषत्सु—"तस्यैवंविदुषो यज्ञस्यात्मा यजमानः श्रद्धा पत्नी शरीरमिध्ममुरो वेदिर्लोमानि बर्हिर्वेदः शिखा

इत्यर्थं भूयः काम आज्यं मन्युः पशुस्तपोऽग्निः शमयिता दक्षिणा वाग्घोता प्राण उद्गाता चक्षुरध्वर्युर्मनो ब्रह्मा श्रोत्रमग्नीत्तावद्ध्रियते सा दीक्षा यदश्नाति तद्धविर्यत्पिबति तदस्य सोमपानं यद्रमते तदुपसदः” इत्यन्नमितिमित्यनेन ॥ ४ ॥

रा० टी०—अधिभूतं च किमित्यस्योत्तरम्—अधिभूतमिति । भूतानि सदेहान् जीवानधिकृत्य तदुपकारित्वेन वर्तमानं वस्तु । क्षरो भावः विनाशी भावः कार्यभूतः पदार्थः भवत्युत्पद्यत इति व्युत्पत्तेः । अधिदैवं किमित्यस्योत्तरं पुरुषश्चेत्यादि । अधिदैवतं दैवतानि सर्वदेवानधिकृत्य तत्स्वामित्वेन वा देवताप्रकरणे मुख्यतया प्रतिपाद्यत्वेन वा वर्तमानं च किमिति पृष्टं वस्तु पुरुषः पुरि देहे शेते तिष्ठतीति पुरुषो जीवः । स च सर्वजीवाभिमानी संकर्षणो ब्रह्मा वा ज्ञेयः । अस्मिन्देहेऽधियज्ञः क इत्यस्योत्तरमधियज्ञोऽहमेवेति । प्रागुक्तादिशाधियज्ञ इति प्रादिसमासः, अधिष्ठितो यज्ञोऽनेनेति बहुव्रीहिर्वा । अत्र लौकिकदेहे यज्ञाधिष्ठाताहमेवेत्यर्थः । अत्रेति देहविशेषणं ईश्वरदेहव्यावृत्त्यर्थं भगवतः प्राणिदेह इव स्वदेहे पृथगभावेन नियन्तृत्वाभावात् । कर्तृभोक्तृफलदातॄणां देहे प्रेरकत्वेन वर्तमानस्यात्र विवक्षितत्वात् । देह इत्युक्तिरप्यस्मिन्देहेऽधियज्ञः क इति कृतप्रश्नानुरोधात् प्रश्ने वा अधियज्ञः क इत्येवोक्ताविन्द्रादेरप्यधियज्ञस्य हरेरन्यस्य सत्त्वात् । प्रश्नस्य तद्विषयत्वे सिद्धार्थतादोषप्रसक्तेस्तद्व्यावृत्त्यर्थं कर्तृभोक्तृफलदातॄणां देहे प्रेरकतया वर्तमानोऽधियज्ञः क इत्यर्थलाभाय देहं इत्यवश्यं वाच्यत्वात् । किंच पूर्वाध्यायान्ते साधियज्ञं मां विदुरिति भगवतोऽधियज्ञसाहित्योक्त्याधियज्ञो भगवतोऽन्योऽन्यादिरिति प्राप्तशङ्काव्युदासाय च देह इत्युक्तिः । सर्वप्राणिदेहगताधियज्ञाख्यरूपविशेषापेक्षया साहित्याभिप्रायेण साधियज्ञं मामित्युक्तिरिति । देह इत्युक्त्या साहित्योक्तेर्गतिसूचनेन भगवदन्यत्वशङ्कानिरासात्साहित्योक्त्या प्राप्तभेदशङ्काया अवश्यं परिहार्यत्वादेव प्रथमप्राप्तस्यात्र देहेऽधियज्ञः कथं केन प्रकारेणेति प्रश्नस्य परिहारमनुक्त्वा क इति प्रश्न एव परिहृतः । किंच सर्वयज्ञभोक्तृत्वसर्वयज्ञप्रवर्तकत्वप्रकारेण हि भगवतोऽधियज्ञत्वं तच्च सर्वयज्ञभोक्तृत्वादिकं भोक्तारं यज्ञतपसामित्यादिपञ्चमान्तोक्तं श्रुतवतोऽर्जुनस्य सिद्धमित्यधियज्ञोऽहमिति भगवतो यज्ञाधिष्ठातृत्वरूपाधियज्ञत्वोक्त्या कथमधियज्ञ इत्यस्य भोक्तृत्वादिना प्रकारेणाधियज्ञत्वमिति परिहारस्य प्राप्तत्वाच्च तत्परिहारो नोक्त इति, यद्वा कथमित्यस्य किंलक्षणक इत्यर्थः । अधियज्ञोऽहमेवेत्यधियज्ञाभिन्नत्वेनोक्तस्य हरेः कविं पुराणमिति कवित्वादिलक्षणोक्त्या एवंलक्षणकोऽधियज्ञ इतिप्राप्तेनोक्तमुत्तरम् । देहभृतां वरेतिसंबुद्धिः । देहभृतां देह इति चोभयत्रान्वयो ज्ञेयः । श्लोकद्वयस्यायमर्थसंग्रहः । ब्रह्म मम व्याप्तरूपं परममक्षरमुच्यते । अध्यात्मं स्वभावः जीवचिदुपकारिदेहेन्द्रियान्तःकरणलक्षणपदार्थः जीवराशिर्वा । कर्म तु चराचरविषयकेश्वरकर्तृकसर्जनम् । अधिभूतं तु क्षरो भावः स देहजीवोपकार्युत्पत्तिविनाशवान्देहेन्द्रियाद्यन्यपदार्थ उच्यते । अधिदैवतं च पुरुषः ब्रह्मा संकर्षणो वा । अत्र देहस्थितोऽधिकयाज्यत्वहेतुनाधियज्ञाख्यो रूपविशेषोऽहमेवेति साहित्योक्त्या प्राप्तभेदशङ्कानिरासायैवकारप्रयोगः । यद्वा स्वभावो भगवत्स्वभावोऽध्यात्ममुच्यते अधिकत्वात् । क्षरो भावः सर्वजीवराशिरधिभूतं भूतशब्दितपृथिव्यादि जडाधिकत्वात् । “पकारः प्राण आत्मा” इति श्रुत्या पकारस्य चेष्टापर्यायप्राणवाचित्वात् पुरुप्राणत्वहेतुना पुरुषशब्दिता रमा अधिदैवतं । देवताधिपो विष्णुरधिको यस्या इतिव्युत्पत्तेरिति । एतेन ते तद्ब्रह्मेत्यर्थद्वयस्यायमर्थः । ब्रह्म व्याप्तं तत् मे रूपं ते विदुः कृत्स्नमध्यात्मं जीवोपकारिदेहेन्द्रियान्तःकरणलक्षणं वस्तु जीवराशिं वा सृष्टिलक्षणं भगवत्कर्म चाखिलं विदुः साधिभूताधिदैवमधिभूतशब्दितसदेहजीवोपकारित्वेन स्थितोत्पत्तिविनाशिपृथिव्यादिपदार्थस्वरूपेण तदधिष्ठातृतया स्थितं तद्रूपविशेषसहितमित्येके । पृथिव्यादिभूताधिकत्वाधिभूतशब्दितसर्वजीवराशेः नियन्तृतया तत्सहितमिति वा । अधिदैवशब्दितसर्वजीवाधिपती ब्रह्माणि संकर्षणे वा स्थितत्वेन तत्प्रेरको नियन्तृतया तत्सहितमिति वा ।